सहस्राणि, तनुवाताश्च महावातिभ्योऽसंख्यानि योजनसहस्राणि, ततोऽप्यसंख्येयानि योजनसहस्राण्याकाशम्। एतच्च मध्ये उत्सेधमानम्। ततः परं क्रमेण हीयमानं प्रान्ते वलयतुल्यमानमिति। घनोदधिवलयविष्कम्भमानं रत्नप्रभायाः षड्योजनानि, घनवातवलयविष्कम्भमानमर्धपञ्चमयोजनानि, तनुवातवलयविष्कम्भमानं सार्धं योजनम्। रत्नप्रभावलयमानादुपरि योजनत्रिभागो घनोदधौ, घनवाते गव्यूतम्, तनुवाते च गव्यूतत्रिभागो वर्त्तते। एतच्छर्कराप्रभायां वलयमानम्। एवं शर्कराप्रभावलयमानादुपर्ययमेव प्रक्षेपः। एवं पूर्वपूर्ववलयमानादुपर्ययमेव प्रक्षेपः सप्तमपृथिवीं यावत्, यदाह ;—

[1]तिभागो गाउयं चेव तिभागो गाउयस्स य।
आइधुवे पक्खेवो अहो अहो जाव सत्तमिआ॥ १॥

प्रक्षेपे सति वलयविष्कम्भमानमाभ्यो गाथाभ्योऽवसेयम्, तद्यथा—

[2]छस्सतिभाग पउणा य पंच वलयाण जोअणपरिमाणं
एगं बारसभागा सत्त कमा बीयपुढवीए॥ १॥

---

(१) त्रिभागो गव्यूतं चैव त्रिभागो गव्यूतस्य च।
आदिध्रुवे प्रक्षेपोऽधोऽधो यावत् सप्तमीम्॥ १॥

(२) षट्कत्रिभागः प्रनूनाश्च पञ्च वलयानां योजनपरिमाणम्।
एकं द्वादशभागाः सप्त क्रमेण द्वितीयपृथिव्याम्॥ १॥

जोअणसत्ततिभागोणा पंच एगं च वलयपरिमाणं।
बारसभागा अट्ठ उ तइयाइ जहक्कमं नेयं ॥ २ ॥
सत्त सपाया पंच उ पउणा दो जोअणा चउत्थीए।
घणउअहिमाइआणं वलयाणं माणमेयं तु ॥ ३ ॥
सतिभागसत्त तह अद्धछट्ठ वलयाण माणमेयं तु।
जोअणमेगं बारसभागा दस पंचमीए तहा ॥ ४ ॥
अट्ठ तिभागोणाइं पउणाइ छच्च वलयमाणं तु।
छट्ठीए जोअणं तहा बारसभागा य एक्कारा ॥ ५ ॥
अट्ठ य छच्चिं य दुं च्चिय घणोअहीमाइआण माणं तु।
सत्तममहीए नेयं जहासंखेण तिण्हं पि ॥ ६ ॥

एतानि च वलयानि पृथिव्याधारभूतघनोदध्यादिभ्यः पृथिवीपर्यन्तपरिधिप्रान्तेषु वलयाकारतया एतावद्विष्कम्भाणि पृथिव्युत्सेधसमोत्सेधानि च ॥ १०४ ॥

योजनसप्तत्रिभागोनं पञ्चैकं च वलयपरिमाणम्।
द्वादशभागा अष्ट तु तृतीयायां यथाक्रमं नेयम् ॥ २।
सप्त सपादाः पञ्च तु प्रगुणे द्वे योजने चतुर्थ्याम्।
घनोदध्यादिकानां वलयानां मानमेतत्तु ॥ ३ ॥
सत्रिभागसप्त तथा अर्धषष्ठं वलयानां मानमेतत्तु।
योजनमेकं द्वादशभागा दश पञ्चम्यां तथा ॥ ४ ॥
अष्ट त्रिभागोनानि प्रगुणानि षट् च वलयमानं तु।
षष्ठ्यां योजनं तथा द्वादशभागाश्चैकादश ॥ ५ ॥
अष्ट च षट् चैव द्वौ चैव घनोदध्यादिकानां मानं तु।
सप्तमभूम्यां नेयं यथासंख्येन त्रयाणामपि ॥ ६ ॥

पुनर्लोकस्वरूपमाह —

**वेत्रासनसमोऽधस्तान्मध्यतो झल्लरीनिभः ।**
**अग्रे मुरजसङ्काशो लोकः स्यादेवमाकृतिः ॥ १०५ ॥**

अधस्तादधोभागे वेत्रासनमधस्ताद् विस्तीर्णमुपर्युपरि सङ्कोचवत् तत्समस्तदाकारः, मध्यतो मध्ये झल्लरीवाद्यावशेषास्तत्सदृशः, अग्रे मध्यलोकादुपरि मुरज ऊर्ध्वमधश्च संकुचितो मध्यभागे विस्तृतो वाद्यविशेषस्तत्सदृशः । एवमधोमध्योर्ध्वेषु आकारत्रययोगी लोकः, यदाहुः—

तत्राधोमुखमल्लकसंस्थानं वर्णयन्त्यधोलोकम् ।
स्थालमिव च तिर्यग्लोकमूर्ध्वमथ मल्लकसमुद्गम् ॥ १ ॥

इह चाधस्तिर्यगूर्ध्वलोका रुचकापेक्षया । रुचकश्च मेरुमध्यगोस्तनाकारचतुराकाशप्रदेशप्रमाणोऽधः, तादृश एवोर्ध्वम्, एवमष्टप्रदेशः, यदाहुः—

[1]अट्ठपएसो रुयगो तिरियलोगस्स मज्झयारम्मि ।
एस पहवो दिसाणं एसेव भवे अणुदिसाणं ॥ १ ॥

तत्र रुचकादधउपरि च नव नव योजनशतानि तिर्यग्लोक इत्युत्सेधेऽष्टादशयोजनशतप्रमाणः, तिर्यग्लोकादधो नवयोजनशतोनसप्तरज्जुप्रमाणोऽधोलोकः । तत्र सप्त पृथिव्य उक्तरूपाः । तत्र रत्नप्रभायां पृथिव्यामशीतिसहस्राधिकयोजनलक्षबाहल्यायाः-

[1] अष्टप्रदेशो रुचकस्तिर्यग्लोकस्य मध्यकारे ।
एष प्रभवो दिशामेष एव भवेदनुदिशानाम् ॥ १ ॥

सुपर्यधश्च योजनसहस्रं मुक्त्वा मध्येऽष्टसप्ततिसहस्राधिके योजनलक्षे भवनपतीनां भवनानि । ते चासुरनागविद्युत्सुपर्णाग्निवात-स्तनितोदधिद्वीपदिक्कुमाराः । ते च चूडामणिफणिवज्रगरुड-घटाब्धिवर्धमानमकरसिंहहस्तिचिह्नाः । तत्र भवनपतयो दक्षिणो-त्तरदिग्व्यवस्थिताः । तत्रासुरकुमाराणां द्वाविन्द्रौ चमरो बलिश्च । नागकुमाराणां धरणो भूतानन्दश्च । विद्युत्कुमाराणां हरिर्हरि-सहश्च । सुपर्णकुमाराणां वेणुदेवो वेणुदालिश्च । अग्निकुमाराणा-मग्निशिखोऽग्निमाणवश्च । वातकुमाराणां वेलम्बः प्रभञ्जनश्च । स्तनितकुमाराणां सुघोषो महाघोषश्च । उदधिकुमाराणां जल-कान्तो जलप्रभश्च द्वीपकुमाराणां पूर्णो वशिष्ठश्च । दिक्कुमाराणा-ममितो मितवाहनश्च । अस्यामेव रत्नप्रभायामुपरितनयोजन-सहस्रस्याध उपरि च योजनशतमुक्त्वा मध्येऽष्टासु योजनशतेष्वष्ट-विधानां पिशाचभूतयक्षराक्षसकिन्नरकिम्पुरुषमहोरगगन्धर्वाणां कदम्बवृक्षसुलसवृक्षवटवृक्षखट्वाङ्गाशोकवृक्षचम्पकवृक्षनागवृक्षतुम्ब-रुवृक्षचिह्नानां तिर्यग्लोकवासिनां व्यन्तराणां नगराणि । तेष्वपि दक्षिणोत्तरदिग्व्यवस्थितेषु द्वौ द्वाविन्द्रौ । तत्र पिशाचानामिन्द्रौ कालो महाकालश्च । भूतानां सुरूपः प्रतिरूपश्च । यक्षाणां पूर्णभद्रो माणिभद्रश्च । राक्षसानां भीमो महाभीमश्च । किन्नराणां किन्नरः किंपुरुषश्च । किंपुरुषाणां सत्पुरुषो महा-पुरुषश्च । महोरगाणामतिकायो महाकायश्च । गन्धर्वाणां गीत-रतिर्गीतयशाश्च ।

रत्नप्रभायामेव प्रथमस्य शतस्याध उपरि च दश दश

योजनानि मुक्त्वा मध्येऽशीती योजनेषु अणपन्निअ-पणपन्निअप्रभृतय-स्तथैव दक्षिणोत्तरव्यवस्थिता अष्टौ व्यन्तरनिकायाः, तथैव द्वौ द्वाविन्द्रौ।

तथा, रत्नप्रभायाः पृथिव्याः समतलादुपरि सप्तसु नवत्यधिकेषु योजनशतेषु ज्योतिषामधस्तलप्रदेशः तदुपरि दशयोजनेषु सूर्यः, तदुपर्यशीतियोजनेषु चन्द्रः, तदुपरि विंशतियोजनेषु तारा ग्रहाश्च। एवमयं ज्योतिर्लोको दशोत्तरं योजनशतं बाहल्येन। एकादशभिर्योजनशतैरेकविंशत्युत्तरैर्जम्बूद्वीपकमेरुमस्पृशन् सर्वासु दिक्षु मण्डलिकया व्यवस्थितं ज्योतिश्चक्रं ध्रुववर्जं भ्राम्यति, अलोकान्तं च एकादशभिर्योजनशतैरेकादशोत्तरैरस्पृशन् मण्डलिकया तिष्ठति, यदाह ;

(१)एक्कारसेक्कवीसा सयमक्कारसहिआ य एक्कारा।
मेरु अलोगा बाहं जोइसचक्कं चरइ ठाइ ॥ १ ॥

अत्र सर्वोपरि किल स्वातिनक्षत्रम्, सर्वेषामधो भरणिनक्षत्रम्, सर्वदक्षिणो मूलः, सर्वोत्तरश्चाभीचिः। तत्र जम्बूद्वीपे द्वौ चन्द्रौ द्वौ सूर्यौ। लवणसमुद्रे चत्वारश्चन्द्राः सूर्याश्च। धातकीखण्डे द्वादशचन्द्राः सूर्याश्च। कालोदे द्विचत्वारिंशच्चन्द्राः सूर्याश्च। पुष्करवरार्धे द्वासप्ततिश्चन्द्राः सूर्याश्च। इत्येवं मनुष्यलोके द्वात्रिंशं चन्द्रशतं सूर्यशतं च भवति। अष्टाशीतिर्ग्रहाः, अष्टाविंशति-

(१) एकादशैकविंशतिं शतान्येकादशाधिकान्येकादश।
मेरु-अलोकाभ्यां बहिर्ज्योतिश्चक्रं चरति तिष्ठति ॥ १ ॥